# विषवैद्यसारसमुच्चयम् उत्तरभागः





---

॥ अथ उत्तरभागः ॥

आखुवृश्चिकलूतादि विषाणां लक्षणं पुनः ।
ताच्चिकित्सां च वक्ष्ये ऽहं यथामति समासतः ॥ २.१ ॥

### [आखुविषचिकित्सा]

शुक्लेणाथ पुरीषेण मूत्रेणापि नखैस् तथा ।
दंष्ट्राभिर् वा क्षिपन्तीह मूषिकाः पञ्चथा विषम् ॥ २.२ ॥

### [सामान्यलक्षणाः]

जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च ।
पिण्डिकोपचयश् चोग्रा विसर्पाः किटिभानि च ॥ २.३ ॥

पर्वभेदो रुजस् तीव्राः मूर्छाङ्गसदनं ज्वरः ।
दौर्बल्यम् अरुचिश्वासवमथुर् लोमहर्षणम् ॥ २.४ ॥

त्वक्स्थे तु मौषिके दोषे तोदकण्डूश् च जायते ।
क्षीरे शिरीषपञ्चाङ्गं रक्तं हृत्वाथ पाययेत् ॥ २.५ ॥

रक्तस्थे ग्रन्थयो दाहा जायन्ते ऽस्य तदा भिषक् ।
रक्तं विमुच्य पयसा पाययेत् तण्डुलीयकम् ॥ २.६ ॥

तृतीये पीतमूत्रत्वं शिरोरुक् ज्वरवान् भवेत् ।
पाययेन् मूलम् अङ्कोलात् क्षीरे वा काञ्चिके ऽथवा ॥ २.७ ॥

मेदस्थे पर्वणां भेदा जायन्ते मण्डलानि च ।
शिरीषपत्रस्वरसे मक्कुणं पाययेत् तदा ॥ २.८ ॥

पञ्चमस्थे वृषविषे वमिर् दाहश् च वेदना ।
जायन्ते तत्र नस्यादि सर्वं तैलेन कारयेत् ॥ २.९ ॥

मज्जस्थे तद्विषे मूर्छादाहौ स्यातां तदा भिषक् ।
शिरीषपञ्चकरसं नावनादिषु योजयेत् ॥ २.१० ॥

सप्तमस्थे विषे मृत्युर् अवश्यं भविता नृणाम् ।
तद्रक्षाम् आशु कुर्वीत सिद्धैर् नस्याञ्जनादिभिः ॥ २.११ ॥

### [आखुविषसामान्यचिकित्सा]

मुस्तालवणवर्षाभूर् नीलीमूलैः सुपेषितैः ।
पानलेपादि कुर्वीत क्षीरे कन्यारसे ऽथवा ॥ २.१२ ॥

अर्कस्य मूलं सशिरिषपञ्चकं
मालेययुक्तं मधुनाप्लुतं च तत् ।
क्षीरेण पीतं विनिहन्ति मौषिकं
विषं यथाघोरतरं तमोर्कः ॥ २.१३ ॥

### [नीलीकरञ्जादिकषायम्, आखुविषाय]

नीलीकरञ्जपिचुमन्दशिरीषशिग्रु-
मुस्तोग्रविश्वसुरभुरुहचन्दनानि ।
एभिः समांशसहितैः परिपक्वम् अम्भः
शीघ्रं विनाशयति मूषिकदोषजालम् ॥ २.१४ ॥

बृहतीमूलतः तुल्यान् त्रिफलाञ् चूर्णयेत् ततः ।
स्नुहिक्षीरेण सम्पिष्ट्वा गुलिकाः कारयेत् भिषक् ॥ २.१५ ॥

धृत्वा ताः स्फाटिके पात्रे शोषयेद् आतपे पुनः ।
एकैकां सघृतां प्रातर् भक्षयेद् अन्नमिश्रिताम् ॥ २.१६ ॥

सर्वाखूनां विषं हन्ति गुप्तम् एतन् मनीषिभिः ।
त्रायन्तीस्वरसे सिद्धं शङ्खपुष्पी वरान्वितम् ॥ २.१७ ॥

घृतं पानादिभिर् हन्याद् अशेषाखुविषं क्षणात् ।
शिरीषपत्रस्वरसे तद् पञ्चाङ्गेन कल्कितम् ॥ २.१८ ॥

पक्वं तैलं निहन्त्य् आशु मौषिकं दोषसंचयम् ।
शङ्खपुष्पीरसे सिद्धं यष्टीमधुककाल्कितम् ॥ २.१९ ॥

तैलं दशगुणक्षीरम् आखूनां विषजित् परम् ।
कार्पासपल्लवं पिष्ट्वा क्षीरेणालोड्य तत् पुनः ॥ २.२० ॥

आकण्ठमग्नः सलिले पीत्वा प्रक्षिप्य भाजनम् ।
पृष्ठतः सलिले भूयो निमज्जनम् अथाचरेत् ॥ २.२१ ॥

### [वृश्चिकविषलक्षणस् तद्चिकित्सा च]

एवं दिनत्रयं कार्यम् आखूनां विषशान्तये ।
विषाणां वृश्चिकोत्थानां वेगचिह्नान्य् अतः परम् ॥ २.२२ ॥

तच्चिकित्सां च वक्ष्ये ऽहं उपकाराय देहिनाम् ।

अविरतपरिकम्पच्छर्दिविभ्रान्तिशूल-
श्रमजलपरितापाः रोमभेदश् च यस्य ।
भृशतरम् अपि तृष्णा दंशदेशे च रक्तं
विदुर् इह नरम् एनं वृश्चिकेनैव दष्टम् ॥ २.२३ ॥

त्वचिस्थे वृश्चिकविषे मुहुस् तोदो भवेत् तथा ।
रुधिरस्थे ऽङ्गदाहश् च हिक्काग्रन्थिस् तृतीयके ॥ २.२४ ॥

चतुर्थे कण्ठशोषश् च ज्वरस् तीव्रो ऽथ पञ्चमे ।
षष्ठे च मनसस् तापः सप्तमे नेत्ररक्तता ॥ २.२५ ॥

मरणं च भवेत् तत्र शीघ्रं कुर्यात् प्रतिक्रियाम् ।

रक्तं हरेद् उग्रविषेण दष्टे
शृङ्गादिभिर् वात्र तु वृश्चिकेण ।
व्यथातिशान्त्यै परम् एतद् एव
कार्यं सुविज्ञेन भिषक्जनेन ॥ २.२६ ॥

अर्कपत्ररसेनाश्वगन्धपिष्टेन नावनम् ।
कुर्यान् मरिचयुक्तेन कृष्णनिम्बेन लेपनम् ॥ २.२७ ॥

तक्रेण ताभ्यां युक्तेन धारां वात्र समाचरेत् ।
तिन्त्रिणीस्वरसेनात्र ससिन्धूत्थेन नावनम् ॥ २.२८ ॥

अञ्जनं नेत्रयोः कुर्याद् अनेनैव विषातुरे ।
करञ्जपल्लवं सम्यक् कराभ्यां परिमर्द्य तत् ॥ २.२९ ॥

दंशे लिप्तं विषं हन्याद् वृश्चिकोत्थम् अयत्नतः ।
रामठं जूर्णितं कांस्यभाजने न्यस्य तत् पुनः ॥ २.३० ॥

ताम्बूलीदलतोयेन मर्दयित्वाथ लेपयेत् ।
दंशे वृश्चिकजं दोषम् आशु नश्येन् न संशयः ॥ २.३१ ॥

बर्हीकुक्कुटपिञ्छाभ्यां सैन्धवेन तिलेन च ।
धूपनं वृश्चिकोत्थानां विषाणाम् आशुनाशनम् ॥ २.३२ ॥

निम्बपत्रनरकेशहरिद्रा वज्रतालदलधान्यतुषैश् च ।
धूपनं सघृतपिञ्छयुतं तद् वृश्चिकोत्थगरलं विनिहन्यात् ॥ २.३३ ॥

## [लूताविषचिकित्सा]

विषं तु लाला नखमूत्रदंष्ट्रा रजःपुरीषैर् अथ चेन्द्रियेण ।
सप्तप्रकारं विसृजन्ति लूतास् तदुग्रमध्यावरवीर्ययुक्तम् ॥ २.३४ ॥

## [लूताविषसामान्यलक्षणः]

दंशप्रदेशे पिडकाः शोफस्फोटः समन्ततः ।
कार्ष्ण्यं तोदः शिरोरुक् च ज्वरः स्याल् लूतिकाविषे ॥ २.३५ ॥

लूतानां प्रथमे वेगे कण्डूकार्ष्ण्यं च जायते ।
विमुच्य रक्तं तुलसीं रजनीं च विलेपयेत् ॥ २.३६ ॥

पाययेच् च तथोर्ध्वं तु प्रकम्पो रोमहर्षणम् ।
जायते भृशम् अत्रादौ पयसा तुलसीं पिबेत् ॥ २.३७ ॥

वेगे तृतीये विस्फोटः शोफस् तृष्णा च जायते ।
चन्दनोशीरमधुकैः पानलेपनम् इष्यते ॥ २.३८ ॥

चतुर्थे लूतिकावेगे ज्वरविस्फोटके तथा ।
मण्डलानि भवेयुश् च मूलं नीलीशिरीषयोः ॥ २.३९ ॥

तद्रसेनैव पिष्ट्वा तत् पानलेपादिकं हितम् ।
शोषः पञ्चमगे देहजिह्वयोश् च प्रजायते ॥ २.४० ॥

तण्डुलीयकमूलं तु पयसा तत्र पाययेत् ।
षष्ठस्थे तालुशिरसोर् वेदना ज्वरमोहकृत् ॥ २.४१ ॥

सुगन्ध्युशीरनीलीभिः चन्दनं पयसा पिबेत् ।
सप्तमे लूतिकादोषे गते तृष्णा प्रजायते ॥ २.४२ ॥

मोहमूर्छे च भवतस् तत्र कुर्याद् यथाविधि ।
लूतघ्नौषधिभिर् नस्यपानादिकम् अतन्द्रितः ॥ २.४३ ॥

## [लूताविषसामान्यचिकित्सा]

शिरीषपञ्चकं पिष्ट्वा पयसा पाययेत् प्रगे ।
लेपयेन् नक्तमालस्य वारिणा तद्विषापहम् ॥ २.४४ ॥

निर्गुण्डीतुलसीनीलीस्वरसे साधुसाधितम् ।
तगरं लशुनं व्योषं कुष्ठं मधुकं चन्दनम् ॥ २.४५ ॥

गोपाङ्गनाश्वगन्धा च विषवेगं रजन्य् अपि ।
एतैः सुकल्कितैस् तैलं लूताविषविनाशनम् ॥ २.४६ ॥

एतैः सुपाचितः क्वाथः लूतानां विषहृत् परम् ।
निर्गुण्डीशारिबोशीरकुष्ठाम्बुनतचन्दनैः ॥ २.४७ ॥

नीलिकापाटलीमूलसुरसापत्मकाह्वयैः ।
विषवेगान्वितैर् एभिः कषायो लूतिकार्तिनुत् ॥ २.४८ ॥

एषो ऽस्मत्दृष्टफलको विरेकत्रिवृतान्वितः ।

लोध्रं सेव्यं पत्मकं पत्मरेणुः
कालीयाख्यश् चन्दनं यच् च रक्तं ।
कान्तापुष्पं दुग्धिनीकामृणालः
लूताः सर्वा घ्नन्ति सर्वक्रियाभिः ॥ २.४९ ॥

लशुनतुरगगन्धा नीलिकाली तुषाभिः
क्वथित इह कषाये काल्कितैः साधुपिष्टैः ।
त्रिकटुरजनिकुष्ठोशीरगन्धाश्वगन्धैः
पचतु पिबतु सर्पिर् लूतिकार्तिप्रशान्त्यै ॥ २.५० ॥

सिद्धं प्रस्थे लशुनतुलसीकाकमाच्यश्वगन्धा-
नीली तोये त्रिकटुरजनी चन्दनोशीरयुक्तैः ।
क्नुप्तैः कल्कैः यद् अपि तुलसीमूलसिद्धे कषाये
सर्पिः सर्वं हरति गरलं लूतजातं विसर्पम् ॥ २.५१ ॥

## [अलर्कविषचिकित्सा]

सारमेयेन दष्टस्य दंशात् कृष्णं क्षरस्य् असृक् ।
शोफतोदज्वराश् च स्युर् भयं च जनसंसदः ॥ २.५२ ॥

ससैन्धवेन पक्वेन सार्पिषा दंशम् आदहेत् ।
आरनालेन सम्पिष्ट्वा लिम्पेद् वाङ्कोलमूलकम् ॥ २.५३ ॥

लेहतैलाज्यपाकेषु सर्वत्रैव च योजयेत् ।
अङ्कोलं सारमेयानां विषेषु परमौषधम् ॥ २.५४ ॥

## [सिद्धौषधम्]

लशुनं व्याघ्रपान्मूलं पृथग् अर्धांशकं भवेत् ।
अङ्कोलचर्मणो ऽंशानि रसे तत् परिपिष्य च ॥ २.५५ ॥

दुग्धेन वा ऽरनालेन दिनत्रयम् अथाचरेत् ।
एवं च पथ्यभुङ्मर्त्यः श्वविषात् परिमुच्यते ॥ २.५६ ॥

चतुर्थे ऽह्नि च कुर्वीत पथ्यं पूर्ववद् आतुरः ।
नीलीकरञ्जमूलाभ्यां क्वाथः श्वविषनाशनः ॥ २.५७ ॥

## [नीलीकरञ्जादिकषायम्]

नीलीकरञ्जतुलसीपिचुमन्दलोध्र-
दार्वीयवाषबृहतीद्वयपर्पटाब्दैः ।
व्योषं शिरीषसुरदार्व् अपि तुल्यभागैः सिद्धं
पयः परिहरेद् विषविभ्रमं च ॥ २.५८ ॥

गुडूचीसारतश् चूर्णं कटुत्रयसमन्वितम् ।
सितया सर्पिषा युक्तं भुक्तं हन्ति विषं शुनाम् ॥ २.५९ ॥

### [अलर्कविषविशेषचिकित्सा]

उन्मत्तबीजं सम्पिष्य तत्पत्रसलिलेन तत् ।
पातव्यं श्वशृगालानां विषेषु परमौषधम् ॥
प्रातः पीत्वा ततो यामत्रयान्ते परिषेचयेत् ।
दष्टस्य मूर्ध्नि तोयेन शीतेन नितरां भिषक् ॥ २.६० ॥

पथ्यं दिनत्रयं कुर्यात् ततः पूर्ववद् आतुरः ।

### [नकुलविषलक्षणस् तद्चिकित्सा च]

कृष्णास् ताल्वोष्ठदन्ताः स्युर् नेत्रे रक्ते ज्वरस् तथा ॥ २.६१ ॥

ग्रीवाभङ्गो वाङ्निरोधो विषे नकुलसम्भवे ।
निर्गुण्डीकन्यकाभृङ्गस्वरसे परिमेलिता ॥ २.६२ ॥

कृष्णा लिप्ताथवा पीता निहन्त्य् एतद् विषं क्षणात् ।

### [मार्जारविषलक्षणस् तद्चिकित्सा च]

दंशे कण्डूश् च विस्फोटस् तालौ नाभ्यां च नीलिमा ॥ २.६३ ॥

ज्वरस् तोदवमिः स्यातां विषे मार्जारसम्भवे ।
पथ्यां सक्षारचित्रान्तां मधुना पाययेन् नरम् ॥ २.६४ ॥

त्र्यूषणं सैन्धवं चात्र लिम्पेत् भृङ्गरसान्वितम् ।
रामठं भृङ्गरसे लिप्त्वा पीत्वा विषं जयेत् ॥ २.६५ ॥

### [वाजीविषलक्षणस् तद्चिकित्सा च]

यस्य दंशे सदा भेदो रुधिरस्रवणं तथा ।
नेत्रे च मुकुलप्राये साश्रुणी भवतस् तदा ॥ २.६६ ॥

तं विद्याद् वाजिना दष्टं तत्र कुर्यात् चिकित्सितम् ।
वचा लोध्राश्वगन्धाश् च पिष्ट्वा क्षीरेण पाययेत् ॥

## [वानरविषलक्षणस् तद्चिकित्सा च]

दंशश् च कृष्णो रुधिरातिविस्रुतिर्
भेदश् च सादो यदि रोमहर्षः ।
श्यावाश् च दन्तोष्ठयुगत्वचः स्युर्
विद्याद् अमुं वानरजाति दष्टम् ॥ २.६७ ॥

पिष्ट्वा शिरीषपञ्चाङ्गं पयसा पाययेच् च तत् ।
लेपयेच् च शमं यायाद् गरलं वानरोद्भवम् ॥ २.६८ ॥

## [नरविषलक्षणस् तद्चिकित्सा च]

मूकत्वं गात्रतोदश् च ज्वरश् चातीव यस्य च ।
श्यामदन्तोष्ठयुग्मत्वं मुखे लालापरिस्रुतिः ॥ २.६९ ॥

नेत्रयोः रक्तिमा च स्युस् तं विद्यान् नृविषार्दितम् ।
तण्डुलीयवचानीलीः पिष्ट्वा क्षीरेण पाययेत् ॥ २.७० ॥

लेपयेच् च विषान् मर्त्यो मुच्यते नरदन्तजात् ।

## [मण्डूकविषलक्षणस् तद्चिकित्सा च]

दंशप्रदेशे पिडकाः सशोफाः
कण्डूश् च तीव्रज्वरतृट्भ्रमाद्याः ।
आध्मानम् एते च भवन्ति यस्य
विदुर् नरं दुर्दुरदष्टम् एनम् ॥ २.७१ ॥

## [ब्राह्मणीविषलक्षणस् तद्चिकित्सा च]

अत्र रामठसंयुक्तं त्र्यूषणं परिपिष्य च ।
पयसां पानलेपाद्यैर् मण्डूकगरलं हरेत् ॥

ब्राह्मणीदंशसम्भूतं विषं प्रायो ऽहिवत् भवेत् ।
नीलीमूलकषायो ऽत्र पातव्यस् तत् प्रशान्तये ॥ २.७२ ॥

शिग्रुनिम्बकरञ्जानां दीर्घवृन्तशिरीषयोः ।
त्वचिः सम्पिष्य पातव्यं ब्राह्मणीविषशान्तये ॥ २.७३ ॥

कृकलासविषस्यापि विधिर् एषः प्रशस्यते ।

## [शतपदीविषलक्षणस् तद्चिकित्सा च]

शतपाद्दंशजं तस्य रसजं च विषं द्विधा ॥ २.७४ ॥

शिरीषपञ्चकं दंशे कटुत्रयसमन्वितम् ।
पिष्ट्वा विलेपनादीन् आचरेत् तत् प्रशान्तये ॥ २.७५ ॥

रसजे तु विशेषेण कोठारूंषि भवन्ति च ।
त्वचि वैवर्ण्यकण्डूतिः स्यातां तत्र भिषग्जितम् ॥ २.७६ ॥

भूनिम्बकेतकीपत्रं केरतैलेन भर्जितम् ।
लेपयेत् तस्य शान्त्यर्थं नीलीतैलं च योजयेत् ॥ २.७७ ॥

आरग्वधादिवर्गेण कषायश् च परं हितः ।

आरग्वधेन्द्रयवपाटलिकाकतिक्ता-
निम्बामृतामधुरसा स्रुववृक्षपाठाः ।
भूनिम्बसैर्यकपटोलकरञ्जयुग्म-
सप्तच्छदाग्निसुषवीफलबाणघोण्टाः ॥

आरग्वधादिर् जयति छर्दीकुष्ठविषज्वरान् ।
कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः ॥

## [गौलिकाविषलक्षणस् तद्चिकित्सा च]

नक्तमालनिशाद्वन्द्वभूतीकार्कास्थिभिः समैः ॥ २.७८ ॥

सव्योषैर् विषनाशाय गौलिकायाः प्रलेपयेत् ।

## [मक्षिकाविषलक्षणस् तद्चिकित्सा च]

पिष्ट्वाञ्जलिंकरं सम्यङ् नवनीतेन संयुतम् ॥ २.७९ (१) ॥

प्रलेपनं प्रकुर्वीत मक्षिकाविषशान्तये ।

## [ताम्बूलनागविषलक्षणस् तद्चिकित्सा च]

इक्ष्वाकुपत्रस्वरसस्य पानम्
ताम्बूलनागस्य विषं निहन्ति ।

सद्योथवाम्भोदरवस्य तोये
हिङ्गु समालोड्य पिबेद् विषार्तः ॥ २.७९ (२) ॥

## [गरविषलक्षणस् तद्चिकित्सा च]

उदरस्थे गरे मर्त्ये बहूपद्रवान् भवेत् ।
गरे पक्वाशयस्थे तु विरेकेण विशोधयेत् ॥ २.८० ॥

आमाशयस्थिते तस्मिन् रोगिणं वामयेद् भिषक् ।

## [गरस्थाननिर्णयपरीक्षा]

नीलीदलान्य् उपादाय पिष्ट्वा क्षीरेण लेपयेत् ॥ २.८१ ॥

उदरं रोगिणो यत्र न शुष्यति चिराद् अपि ।
तत्रस्थं गरलं विद्याद् इत्य् आहुर् गरकोविदाः ॥ २.८२ ॥

कृतशुद्धेः पुनस् तस्य दोषशेषक्षयाय च ।
मूलं तु श्वेतपारन्त्याः पिष्ट्वा क्षीरेण पाययेत् ॥ २.८३ ॥

समन्त्रकं यथाशास्त्रम् अथवा पृथुकाह्वयम् ।
विषवेगं च रुद्राक्षं सुवर्णं वचयान्वितम् ॥ २.८४ ॥

इति संक्षेपतः प्रोक्तं गरदोषचिकित्सितम् ।

## [स्थावरविषलक्षणस् तद्चिकित्सा च]

अथ स्थावरजातानां विषाणां लक्षणानि च ॥ २.८५ ॥

तच्चिकित्सां प्रवक्ष्यामि यथामति समासतः ।
पत्रपुष्पफलत्वग्भिर् निर्यासक्षीरबीजकैः ॥ २.८६ ॥

कन्दमूलरसैश् चापि स्थावरांशैर् विषोद्भवः ।

वदति च बहुवाक्यं तापखेदज्वराः स्युर्
जनयति वमिसादौ मोहविण्मूत्ररोधम् ।
इति विविधविकाराः यत्र पश्यान्ति घोराः
विदुर् इह नरम् आर्तं स्थावरोत्थैर् विषैस् तम् ॥ २.८७ ॥

नीलीमूलं सैन्धवं तण्डुलीयं
किण्वे पिष्ट्वा पानलेपादि कुर्यात् ।
क्षीरेणैतत् सैन्धवोनं पिबेद् वा
सद्यो नश्येत् स्थावरोत्थं विषं तत् ॥ २.८८ ॥

नीलीमूलं त्व् अत्र तत्पत्रतोये
पिष्ट्वा पानाल् लेपनात् सेचनाद् वा ।
सद्यो नश्येत् स्थावरं जङ्गमं वा
दोषं त्व् एतत् सर्वविद्वद्भिर् उक्तम् ॥ २.८९ ॥

नवनीतं विषं हन्याद् आशु भल्लातकोद्भवम् ।
शतधौतघृतेनात्र लेपनं परमौषधम् ॥ २.९० ॥

## [पशूनां विषलक्षणस् तद्चिकित्सा च]

दंशे शोफो रोमहर्षो ज्वरश् च
मूर्ध्नः कम्पो नेत्रयोश् चाप्रसादः ।
लालास्रावः फेनयुक्तो गवां स्युर्
विद्याद् एवं तद् विषं जङ्गमोत्थम् ॥ २.९१ ॥

छेदं च दाहं च विचूषणं वा
कुर्वीत तस्यातिविवृद्धिकाले ।
घृतेन सिन्धूत्थयुतेन धारां
सद्यो विदध्याद् विषशान्तये ऽत्र ॥ २.९२ ॥

वचानागरसिन्धूत्थपिप्पलीमरिचैः समैः ।
खार्या पिष्टैर् विषं हन्यात् गवां जङ्गमसम्भवम् ॥ २.९३ ॥

नीलीमूलं निशाद्वन्द्वं तण्डुलीयकसंयुतम् ।
शिरीषपञ्चकेनापि युक्तं खार्यासु पेषितम् ॥ २.९४ ॥

पानाद्यैर् नश्यति क्ष्वेडं पशूनां परमं हितम् ।
लवणं लशुनं चैव मञ्जरीपत्रजे रसे ॥ २.९५ ॥

पेयं चतुष्पदां सद्यो विषघ्नं तन् नृणां अपि ।
शिरीषहिङ्गुलशुनं वचामरिचसंयुतम् ॥ २.९६ ॥

पिष्ट्वारनाले पानाद्यैर् विषं हन्याद् गवां क्षणात् ॥ २.९७ ॥

सतण्डुलीयकं शरपुङ्खपत्रं रसेन युक्तं गिरिकर्णिकायाः ।
समन्वितं चाभिषवेण सद्यो निहन्ति पानाद् गरलं पशूनाम् ॥ २.९८ ॥

॥ विषातुरपथ्यापथ्याः ॥

तैलं माषं कुलत्थं गुडम् अपि लवणं मद्यमीनामिषाम्लाः
तक्रं दध्यह्निनिद्रा निशि पुनर् अथवा जागरः स्त्रीप्रसङ्गः ।
धूमो वह्न्यातपौ च प्रपुरुषपवनो धूमपत्रादि सेवा
वर्ज्या एते विषार्तैर् अनिशम् इति जगुर् वैद्यशास्त्रार्थविज्ञाः ॥ ३.१ ॥

पथ्यं भुक्तौ विषार्तेष्व् अपि च बहुगुणं तण्डुलं षष्टिकाख्यं
ग्राह्यं कूश्माण्डजातं फलम् अपि सुतरां तण्डुलीयादिशाकम् ।

गव्यं दध्नाविहीनं हितम् इह मधुरस्निग्धलघ्वन्नजातं
युक्त्या सम्यग्विचार्यं गरलगतिवशाद् दोषदूष्यादि सर्वम् ॥ ३.२ ॥

**[स्वेदद्रव्याः]**

मुसलीलाङ्गलीनिम्बशिरीषबकुलानि च ।
पत्राणि खार्यां निक्षिप्य पक्त्वास्वेदं समाचरेत् ॥ ३.३ ॥

धान्यस्वेदं च मन्यन्ते केचित् तेषु प्रियंगवः ।
श्रेष्ठाः स्वेदविदावुक्तं सर्वं स्नाने च योजयेत् ॥ ३.४ ॥

तैलं तु नीलीतोयेन सिद्धं तन्मूलकाल्कितम् ।
विषार्ते तत्परं पथ्यं स्नाने ऽभ्यङ्गादि कर्मणि ॥ ३.५ ॥

निशागरलवगाक्षैस् त्रिश्चतुःपञ्चभागिकैः ।
युक्तं विपक्वं सलिलं चतुर्भागावशेषितम् ॥ ३.६ ॥

स्नानार्थम् उपयुञ्जीत विषार्तानां परं हितम् ।
क्षीरे धात्रिफलं पक्त्वा पिष्ट्वा मूर्ध्नि धारयेत् ॥ ३.७ ॥

नीलीमूलं सकर्पूरम् उत्तमाङ्गे विलेपयेत् ।
देवदालीनिशाद्वन्द्वं मूर्ध्नि लेपाद् विषापहम् ॥ ३.८ ॥

पाठा शिरीषमूलाभ्यां गृहधूमं ससैन्धवम् ।
भृङ्गतोयेन सम्पिष्ट्वा मूर्ध्नि लेपो विषापहः ॥ ३.९ ॥

चन्दनोशीरसिन्धूत्थं विषवेगं कटुत्रयम् ।
पिष्ट्वा भृङ्गरसे मूर्ध्नि लेपनं विषनाशनम् ॥ ३.१० ॥

व्याघ्रचर्मविलालास्थिनकुलाङ्गरुहैः समैः ।
चूर्णितैर् मेषदुग्धाक्तैर् धूपः सर्वविषापहः ॥ ३.११ ॥

**[सर्पसामान्यचिकित्सा]**

लक्षणैर् अत्र पूर्वोक्तैः सर्पजातिर् विशेषतः ।
न ज्ञायते विषस्याप्तिर् भिषजा चेद् इहोच्यते ॥ ३.१२ ॥

सामान्यतो विषार्तानां रक्षणाय चिकित्सितम् ।

**[सद्योदष्टचिकित्सा]**

दष्टमात्रो दशेद् आशु तम् एव पवनाशिनम् ॥ ३.१३ ॥

यष्टिलोष्टादिकं दन्तैः छित्वा चानु ससंभ्रमम् ॥ ३.१४ ॥

निष्ठीवेन समालिम्पेद् दंशं कर्णमलेन वा ।

**[अरिष्टाबन्धनः]**

दंशस्योपरि बध्नीयाद् अरिष्टां चतुरङ्गुले ॥ ३.१५ ॥

क्षौमादिभिर् वेणिकया सिद्धैर् मन्त्रैश् च मन्त्रवित् ।
अम्बुवत् सेतुबन्धेन बन्धेन स्तभ्यते विषम् ॥ ३.१६ ॥

न वहन्ति सिराश् चास्य विषं बन्धाभिपीडिताः ।
निष्पीड्यानूद्धरेद् दंशं मर्मसन्ध्यगतं तथा ॥ ३.१७ ॥

न जायते विषवेगो बीजनाशादिवाङ्कुरः ।
दहेद् वा हेमलोहाद्यैर् दंशं मण्डलिवर्जितम् ॥ ३.१८ ॥ %Cf. Sउश्रुत ५.५.७

भस्मसात् कुरुते वह्निः क्षणेन विषसंचयम् ।
प्रच्छायान्तररिष्टायाः मांसलं तु विशेषतः ॥ ३.१९ ॥

अङ्गं सहैवदंशेन लेपयेद् अगदैर् मुहुः ।
चन्दनोशीरयुक्तेन सलिलेन च सेचयेत् ॥ ३.२० ॥

विषे प्रविसृते विध्येत् सिरां सा परमा क्रिया ।
रक्ते निर्ह्रियमाणे हि कृत्स्नं निर्ह्रियते विषम् ॥ ३.२१ ॥

सिरावेधे न शक्तश् चेत् शृङ्गाद्यैर् निहरेद् असृक् ।
आदौ जीवस्य रक्षार्थम् अगदं तूपयोजयेत् ॥ ३.२२ ॥

घृतेन गोशकृत्सारं पाययेत् पूर्णमात्रया ।

**[हृदयावरणः]**

पिबेद् घृतं घृतक्षौद्रम् अगदं वा घृताप्लुतम् ॥ ३.२३ ॥

हृदयावरणे चास्य श्लेष्मा हृद्य् उपचीयते ।
प्रवृत्तगौरवोत्क्लेश हृल्लासं वामयेत् ततः ॥ ३.२४ ॥

द्रवैः काञ्चिककौलत्थतैलमद्यादिवर्जितैः ।

**[वमनौषधः]**

इक्ष्वाकुफलतो मध्यं मस्तुना परिमेलितम् ॥ ३.२५ ॥

वमनार्थं प्रयुञ्जीत विषार्ते परमं हितम् ।
तेन तक्रं सुपक्वं वा पिबेत् समधुसैन्धवम् ॥ ३.२६ ॥

## [Oओथु (ब्लोwइन्ग् ओf मेदिचिने)]

विश्वदुःस्पर्शमरिच विषवेगान् समांशकान् ।
वक्त्रे धृत्वा दष्टकस्य कर्णयोर् मूर्ध्नि चासकृत् ॥ ३.२७ ॥

फूत्कारं युगपत् कुर्युः सपञ्चाशतं शनैः ।
त्वगादि धातुत्रयगं विषं हन्याद् इदं परम् ॥ ३.२८ ॥

समूलपुष्पं वरकन्यकायाः
पत्रं सुपिष्ट्वा पयसा च पेयम् ।
तोयेन वा सर्वविषेषु सर्वं
कार्यं विलेपादिकम् अग्र्यम् एतत् ॥ ३.२९ ॥

पानेन लेपविधिनापि च नावनेन
तोयेन टङ्कणरजः परिमेलितेन ।
नाशं प्रयाति गरलं निखिलं क्षणेन
नैशं तमस् तरुणभास्कररश्मिनेव ॥ ३.३० ॥

तण्डुलीयाश्वगन्धे च गृहधूमसमन्विते ।
पिष्ट्वा तोये गवां पानलेपाद्यैर् निर्हरेद् विषम् ॥ ३.३१ ॥

हस्तेन हिङ्गुसहितार्कविजीर्णपत्र-
लिप्तेन दष्टकमुखं बहुशः पिदध्यात् ।
दृष्टं तद् एतद् अचिराद् अगदप्रभवात्
सर्पादिजं गरलम् आशु विनाशम् एति ॥ ३.३२ ॥

कतकबीजसुपक्वकषायके
बहुभावितम् अम्बरखण्डकम् ।
रविकरेषु विशोष्य तिलोत्थिते
परिकलय्य च नावनम् आचरेत् ॥ ३.३३ ॥

दिनकृज् जीर्णपत्रेण लवणं हिङ्गु वा सह ।
पिष्ट्वा नराम्बुना लेपो निःशेषविषनाशनः ॥ ३.३४ ॥

नक्तमालदलं पिष्ट्वा महिषीशकृता समम् ।
दंशे निधाय बध्नीयाद् विषशोफहरं परम् ॥ ३.३५ ॥

शीताम्बुना चन्दनकल्कितेन
सेकं प्रकुर्वीत भुजंगदंशे ।
शोफं सदाहं रुजम् आशु हन्ति
नैशं तमो बालरविर् यथैतत् ॥ ३.३६ ॥

कृष्णपक्षे च पञ्चम्यां शिग्रुबीजं समाहृतम् ।
तुर्यारोनेन्दुसंज्ञेन योजयित्वा पुनर् भिषक् ॥ ३.३७ ॥

केतकीमूलनिष्ववाथे सुपिष्ट्वा गुलिकीकृता ।
टङ्कणं चूर्णयित्वात्र समालिण्य विशोषिता ॥ ३.३८ ॥

मूत्रसङ्गे विषार्तानां प्रयोक्तव्या सुखाम्बुना ।
गुप्तम् एतत् परं शास्त्रे भिषग्भिः सुमनीषिभिः ॥ ३.३९ ॥

### [त्रिमूर्ति]

निम्बनीलीकरञ्जानां मूलं तत्पत्रवारिणा ।
पिष्ट्वा पानादिना सद्यो निहन्ति निखिलं विषम् ॥ ३.४० ॥

### [गुटिकाः]

कोशातकीवचाहिङ्गुशिरीषं व्योषसंयुतम् ।
अर्कक्षीरेण सम्पिष्ट्वाप्य् अजमूत्रे ऽथवा पुनः ॥ ३.४१ ॥

शिग्रुवल्करसे पानं नस्यं द्रोणोदकेन च ।
रसेन नागवल्लीनाम् अञ्जनं परिकल्पयेत् ॥ ३.४२ ॥

### [अश्वगन्धादिगुटिका (लघु)]

रम्भाम्भसा भावितम् अश्वगन्धं
वचा शिरिषं च कटुत्रयं च ।
पानादि तत् तत् क्रिययोपयोगाद्
उत्तिष्ठते तक्षकदष्टको ऽपि ॥ ३.४३ ॥

कणाविषौ सैन्धवटङ्कणौ च
सम्पिष्य हिङ्गुं हरितालयुक्तम् ।
वज्राम्बुना तां गुलिकां च कृत्वा
पानादि वैकुण्ठजलेन कुर्यात् ॥ ३.४४ ॥

### [मृतसंजीवनि]

शिरीषबीजं विषशरिबे च
वचां रसाढ्यां हरितालयुक्ताम् ।
सदेवदालीबकुलास्थिहिङ्गु-
मनःशिलाव्योषपलाण्डुयुक्ताम् ॥ ३.४५ ॥

वज्राम्बुपिष्टां गुलिकां च कृत्वा
छायासु शुष्कां खलु कोष्णतोये ।
पानं च लेपं नृजलेन सर्वं
नस्यं च वैकुण्ठजलेन कुर्यात् ॥ ३.४६ ॥

तेनैव शिरसो लेपः स्तन्येनाञ्जनम् एव च ।
मृतसंजीवनिसंज्ञा गुलिकैषा विषापहा ॥ ३.४७ ॥

शक्रजिच्छक्तिनिर्भिन्नः सौमित्रीसुखदायिनी ।
मृतसंजीवनी पूर्वं तद्वन् नृणां सुखावहा ॥ ३.४८ ॥

### [हिङ्ग्वादिगुटिका]

हिङ्गुव्योषाश्वगन्धामहिषशिशुशकृत्सैन्धवैस् तुल्यभागैर्
अर्केन्दुक्षीर पिष्ट्वा पुनर् अपि गुलिका भाविता सप्तवारम् ।
पानाद्यैः क्ष्वेलजालं जयति वमति चेद् दष्टकः पीतमात्रे
मृत्योर् गेहं प्रयाति द्रुततरम् अमुना शम्भुना रक्षितो ऽपि ॥ ३.४९ ॥

### [अश्वगन्धादिगुटिका (बृहत्)]

नक्तमालतरुकोटरमध्ये
निक्षिपेद् अथ तुरंगमगन्धाम् ।
तन्मुखं च शकलेन केनचिद्
दारुजेन सुतरां पिधाय च ॥ ३.५० ॥

मासम् अत्र निहितां पुनश् च ताम्
एवम् एव पिचुमन्दकोटरे ।
स्थापनेन परिशोध्य तां पुनः
कोटरे ऽपि च कदम्बदारुजे ॥ ३.५१ ॥

दीर्घवृन्ततरुकोठरे ऽथवा
संनिधाय परिशोध्य पूर्ववत् ।
तण्डुलीयकनिशाद्वयान्वितां
वत्सनाभधवलार्कसंयुताम् ॥ ३.५२ ॥

हेमताम्ररजसा च मेलितां
नीलिकादलरसेन पेषयेत् ।
वासरत्रितययुग्मम् अथैकं
चन्दनाम्बुनि च पञ्चवासरम् ॥ ३.५३ ॥

नागरोत्थसलिले दिनत्रयं
पेषयेच् च गुलिकां विधीयताम् ।
एतद् एव फणिनां विषे ऽखिले
घोणसादिगरले च योजयेत् ॥ ३.५४ ॥

अलम् एष प्रभावेण सर्वत्र गरलामये ।
किम् अन्यैर् गरलार्तानां औषधैः परिकल्पितैः ॥ ३.५५ ॥

### [विषहारिलेह्यम्]

मृदङ्गफलिकाबीजं स्वरसे नागवीरुधः ।
सम्यक् पिष्ट्वा ततो धीमान् निदध्यात् कांस्यभाजने ॥ ३.५६ ॥

ततस् तस्य जलं शुद्धम् उद्धृत्य शुभभाजने ।
निम्बतैलं समानांशम् अत्र कृत्वा भिषग्वरः ॥ ३.५७ ॥

गन्धकं चूर्णयित्वास्मिन् युञ्ज्यात् पञ्चमभागिकम् ।
तत्तुल्यं शिवबीजं च ताम्बूलरसशोधितम् ॥ ३.५८ ॥

उल्लिखेत् पाणिना सर्वम् एकीकृत्य यथाविधि ।
यावन् निर्जलम् एतत् स्याद् गरलघ्नरसायनम् ॥ ३.५९ ॥

मरिचं श्वेतगुञ्जायाः फलं बकुलबीजकम् ।
जम्बीरसलिले सम्यक् पिष्ट्वा च विषमोहिते ॥ ३.६० ॥

अञ्जनं नयनद्वन्द्वे करोतु निखिले विषे ।
रसेन हिङ्गु मरिचं सगुञ्जा बकुलास्थि च ॥ ३.६१ ॥

वैकुण्ठतोये सम्पिष्ट्वा नावनं विषनाशनम् ।
कटुतुम्बीफलास्थीनि शिवरेतश् च गन्धकम् ॥ ३.६२ ॥

पिष्ट्वा शिरीषपत्राणां रसेन दिवसत्रयम् ।
कटुतुम्बीरसे दत्त्वा तैः कल्कैः विपचेद् घृतम् ॥ ३.६३ ॥

तत्प्रलेपात् विषं हन्याद् दर्व्यादीनां दन्तक्षते ।

## [स्तम्भितविषचिकित्सा]

उपकुञ्जिकया सिद्धं क्वाथं क्षीरसमन्वितम् ॥ ३.६४ ॥

पीत्वा विषं जयेत् स्तब्धम् अपथ्याचरणादिभिः ।
शिरीषसारमूलत्वक्पत्रपुष्पफलैः कृतः ॥ ३.६५ ॥

क्वाथः पीतः ससर्पिष्को निहन्त्य् आशु पुरातनम् ।
गरलं धातुलीनं वा पयसा क्वथितो ऽथवा ॥ ३.६६ ॥

गरवेगयुतो वैषः क्वाथस् तत्र तरां हितः ।
शीतोदकेन दष्टस्य धारां मूर्धनि कारयेत् ॥ ३.६७ ॥

घृताक्ते नितरां शैत्यं यावत् स्यात् तावद् आचरेत् ।
ततस् तु जडताशान्त्यै मरिचं कोष्णवारिणा ॥ ३.६८ ॥

पेयं तद्विषनिर्हारे सलिलं परमौषधम् ।
विषापाये ऽधिकं क्रुद्धं दोषं पश्चाद् उपाचरेत् ॥ ३.६९ ॥

शमनैः शोधनैर् यदा यथावद् विहितौषधैः ।
नीलीदलरसे सिद्धं घृतं तन्मूलकल्कितम् ॥ ३.७० ॥

## [मङ्गलम्]

स्नेहनार्थं प्रयुञ्जीत विषार्तेषु परं हितम् ।

यो वा लोकान् विषार्तान् सुखयति नितरां पक्षजैः सामघोषैर्
यो ऽसौ दैत्यारिकेतौ विलसति हरिणाधिष्ठितं तं खगेन्द्रम् ।
चञ्चत्सौवर्णपक्षाञ्चितं धवलगलप्रोल्लसत्सर्पराजं
वन्दे वन्दारुवृन्दान् अभिमतफलसंदोहनैः पूरयन्तम् ॥ ३.७१ ॥

अज्ञानाद् अथवा भ्रान्त्या यद् असम्यग् मयोदितम् ।
सम्यग् आलोक्य तत्सर्वं क्षन्तुम् अर्हन्ति सज्जनाः ॥ ३.७२ ॥

**॥ शुभम् अस्तु ॥**